॥ श्री ॥
अथ श्री त्रिविक्रमपंडिताचार्यसुत श्री नारायणपंडिताचार्यविरचितः
॥ श्री मध्वविजयः ॥
६. षष्ठः सर्गः
ऐतरेयमथ किंचन सूक्तं सूचयन् सदसि तत्र गरिष्ठः ।
श्रोतुमिच्छति सभा भगवद्भ्यः सूक्तभावमिति तावदुवाच ॥ ६.१ ॥

वर्णसौष्ठवगरिष्ठमतूर्णं तुल्यमात्रमतिमात्रसुलक्ष्म ।
व्यूड हृज्जलद घोषममुष्यो च्चारणं विदधदभ्यधितार्थम् ॥ ६.२ ॥

लक्षणान्विततया वचनेऽस्मिन् देवतागुरुमसावतिशेते ।
मानमित्यपि विधाय धिया ते तत् तु सूक्तमपरार्थमवोचन् ॥ ६.३ ॥

स्यात् तथेत्थमपि संभविताऽर्थः त्र्यर्थतां श्रुतिषु वित्त दशार्थम् ।
भारतं ननु शतार्थमपि स्याद् वैष्णवं पदसहस्रतयं हि ॥ ६.४ ॥

इत्युदीरयति विस्तृतचित्ते भूसुरा इह जिगीषव ऐनम् ।
ऊचुरर्थशतकं हरिनाम्नां वर्ण्यतामिति सहासमुखास्ते ॥ ६.५ ॥

वर्णयामि तदहं सकलं वः सौष्ठवादनु वदंतु भवंतः ।
तं वदंतमिति तेऽथ वदंतो बाढमित्यतिदृढोद्यममापुः ॥ ६.६ ॥

प्रत्ययप्रकृतिसंगमभंगीं शब्दशास्त्रविहतांप्रतिदर्श्य ।
शुद्धधीः श्रुतिशिरः शतसिद्धान् अभ्यधात् सपदि विश्वपदार्थन् ॥ ६.७ ॥

यावदर्थशतकं न विशंकः संततोक्तिकृदपूपुरदेषः ।
वर्णितावधृति दुर्बल चित्ताः तावदाकुलहृदो ह्यभवंस्ते ॥ ६.८ ॥

सांगवेदचतुरा इतिहासे शिक्षिताः सुबहवोऽप्यतिधृष्टाः ।
नैतदीरितमहो जगृहुस्ते विश्वसंक्षयपयोऽंधुगणा वा ॥ ६.९ ॥

देवतास्वसुलभ प्रतिभा ते मानुषेषु चपलेषु कथा का ।
क्षाम्य सौम्य सकलज्ञ नमस्ते ते ब्रुवंत इति तं किल नेमुः ॥ ६.१० ॥

वेदशास्त्रचतुरैरिह विद्यावित्तलिप्सुभिरवाप्तमशेषैः ।
प्राप केरळसुमंडलजातैः अन्यदायतनमायतचेताः ॥ ६.११ ॥

तर्कतंत्रकुशलानपि पुंसः चर्करीति बत सोऽयममानान् ।
मानमानमयतीह कथं नो नैष मंडलभुवां समितानाम् ॥ ६.१२ ॥

मंत्रयंत इति ते द्विजवर्याः अन्यदेशजमुखस्तमपृच्छन् ।
सद्दादादसुशंसननिंदाकारिसूक्तगतमर्थमुपेत्य ॥ ६.१३ ॥

तं स्फुटं प्रकथयन् स पृणीयाच्चब्दमूलमवदत् पृण धतुम् ।
तं जिगीषुमथ विप्रमदः प्रीधातुमेष निगदंतमुवाच ॥ ६.१४ ॥

प्रादिभेदमविदन् गुणय त्वं मूढ पांसुषु लिखन् लिपिसंघम् ।
भत्सयन्निति जहास सुहासो मत्सराकुलधियो जडयन् सः ॥ ६.१५ ॥

तत् प्रसंगबलतोऽखिलविद्यापाटवं पृथः हृदः प्रतिबुद्ध्य ।
आनमन् सबहुमानममी तं यं नमंति किल नाकिनिकायाः ॥ ६.१६ ॥

कन्यकादृतसुरेंद्रवपुः श्रीदानवाचिवरसूक्तहृदुक्तौ ।
कुत्रचित् सदसि तावदपाला कीर्तिताऽतितरुणीत्ययमूचे ॥ ६.१७ ॥

श्वित्रिणी भवति तत्पदवाच्येत्याग्रहेण वदतोऽविदुषोऽत्र ।
कश्चिदेष्यति विपश्चिदिहैनं पृच्छतेत्ययमगच्छदथोक्त्वा ॥ ६.१८ ॥

देशमेनमचिरादुपयातः तादृशाकृतिरहो कृतबुद्धिः ।
तांस्तथाऽभ्यधित तत्पदभावं सूरिमौलिमणिनाऽत्र यथोचे ॥ ६.१९ ॥

केवलं न सकलाः श्रुतिविद्याः मानपूर्वकसमस्तगिरोऽस्य ।

अप्यनागतगतप्रतिपत्तिं श्रद् दधुः पृथलचेतस ऐते ॥ ६.२० ॥

यद्यदेव सपदि प्रकृतं स्यात् तत्तदेष यदवेदखलं च ।
सर्वदा सदसि सर्वबुधानां सर्वविद्यतिरिति प्रथितोऽभूत् ॥ ६.२१ ॥

अप्रयातमपि देशमशेषं व्यानशे सुजनकैरवबंधुः ।
पूर्णदृक् प्रततया निजकीर्त्या पूर्णचंद्र इव चंद्रिकयाऽलम् ॥ ६.२२ ॥

सुंदरेषु सुरमंदिरवृंदेष्विंदिरारमणवंदनकृत्यम् ।
आचरन्नसुचिरात् सुविचारो रूप्यपीठपतिमाप मुकुंदम् ॥ ६.२३ ॥

भूसुरप्रवरबुद्धिसमृद्धिव्यक्तयुक्तवपुषं रुचिरांगीम् ।
सूत्रदीप्तमणिमालिकयाऽलं भूषितां भवनभूषणभताम् ॥ ६.२४ ॥

पादसुंदरपदक्रमभावैः भासितांप्रकटवर्णगुणाढ्याम् ।
भारतोत्तमभृतामनुरूपाच्छादनां समधिकस्वर शोभम् ॥ ६.२५ ॥

राजसूयमुखसन्मखवृत्तां वासुदेवगुणनिष्ठितभावाम् ।
सर्वधर्मपरिशिक्षणदक्षां वंदितां जनतया जननीवत् ॥ ६.२६ ॥

मौलिसंग्रहविकर्षणदूनां मायिना सदसि दुष्टजनेन ।
न्यायमार्गमपहाय महांतं स्वेश्वरत्वमपि साधयताऽलम् ॥ ६.२७ ॥

सज्जनैः कतिपयैरतिदीनैः चालितैः कलिबलाच्छभमार्गात् ।
अप्युपेक्षितविकर्षणदुःखां सातिशोकमपि कैश्चन दृष्टाम् ॥ ६.२८ ॥

वासुदेव धरणीधर नाथेत्युच्चकैरपि मुहुः प्रवदंतीम् ।
पूर्णसद्गुणमजं गतदोषं बिभ्रतीं हृदि विविक्तमशेषात् ॥ ६.२९ ॥

वार्यतां बुधजनैर्ननु हाहा नैष धर्म इति चाभिदधनाम् ।
कृष्णलाळिततमामनवद्यां अप्यनन्यशरणां शरणोत्काम् ॥ ६.३० ॥

वेदिजामिव पुरा भरताग्र्यः स स्वयं श्रुतिततिं खलु दृष्ट्वा ।
पुष्टबुद्धिरकरोत् करुणाब्धिः दुष्टपक्षदमनस्थिरसंधाम् ॥ ६.३१ ॥

अव्ययं सततमप्युपभक्त्या वित्तमग्र्यमिव दूरयियासुः ।
ज्यायसे सगुरवे हरिगीताभाष्यमेष विरचय्य तदाऽदात् ॥ ६.३२ ॥

हेतुवादिनि विशंकटबुद्धौ तीर्थमर्थयति गंतुमनुज्ञाम् ।
तां दिदेश पुरुषोत्तमतीर्थः चिंतयन् स पुरुषोत्तम रक्षाम् ॥ ६.३३ ॥

नीरजा मलयमंडलवृत्त्या श्लाघितो भुवि सदाळ्यनुयातः ।
साधुपांथपरितापमपास्यनुत्तरां दिशमयान्मरुदंशः ॥ ६.३४ ॥

बुद्धिशुद्धिकरगोनिकराढ्यं तीर्थजातमुभयं च धरण्याम् ।
आत्ममज्जनत एव निकामं पर्यशोधयदमंदमनीषः ॥ ६.३५ ॥

वासुदेवपदसंततसंगी तेजसाऽप्यलमधः कृतशर्वः ।
अत्यवर्तत नितांतमथासौ गांगमोघमघनाशनकीर्तिः ॥ ६.३६ ॥

तत्र तत्र स जगत्त्रयचित्रं कर्म शर्मदमनुस्मृतिमात्रात् ।
संचरन् विदधदाप नराणां गोचरं बदरिकाश्रमपार्श्वम् ॥ ६.३७ ॥

मंडयन् भरतखंडमखंडं नादिरायणपदोऽत्र परो यः ।
तं नमन् प्रचुरधीर्हरिगीताभाष्यमार्पयदुपायनमस्मै ॥ ६.३८ ॥

प्रीतयेऽस्य पुरतो वरभाष्यं वाचयन् स जनतामपसार्य ।
वच्मि शक्तित उरुक्रमगीताभष्यामित्यकथयत् पुरुसंख्यः ॥ ६.३९ ॥

एतदर्थमतिसूक्ष्ममपि त्वं शक्त एव न यदात्थ समस्तम् ।
तेन लेशत इतीह पदं स्याद् इत्यगद्यत जगज्जनकेन ॥ ६.४० ॥

तेन तत्प्रवचने विहतेऽलं शुश्रुवुः प्राशयिता अपि शिष्याः ।
उच्यतामिति मुहुः सपृथिव्यास्फालनं पदमहो हरिणोक्तम् ॥ ६.४१ ॥

शब्दभेदमवधर्य तमर्चासन्निषण्णवपुषः परमस्य ।
तस्य भावविदमंदमनीषः प्रोत्थितः प्रवचनं व्यधितैभ्यः ॥ ६.४२ ॥

मज्जनं व्यधित शीतळगंगावारि नित्यमरुणोदयकाले ।
यत् स्पृशंति न नरा हिमभीता अंश ऐष पृषतामधिपस्य ॥ ६.४३ ॥

काष्ठमौनमदधादुपवासं शुद्धमप्यकृत शुद्ध हृदिच्छन् ।
नित्यतुष्टहरितोषविशेषं चिंतयन् प्रभुमनंतमठांतः ॥ ॥ ६.४४ ॥

प्रैरयत् स्वचरणे रतचित्तं मध्वमत्र दिनमंडलमेनम् ।
स्वाश्रमोपगमनाय मुकुंदो दीप्तिदृष्टिविदितागतिरन्यैः ॥ ६.४५ ॥

नक्तमेव भगवत्युपयाते प्रोदिते सति सहस्रमरीचौ ।
मौनवानलिखदुत्तमचित्तः शिष्यशिक्षणपरः करुणावान् ॥ ६.४६ ॥

नेदृशं स्थळमलं शमलघ्नं नास्य तीर्थसलिलस्य समं वाः ।
नास्मदुक्तिसदृशं हितरूपं नास्ति विष्णुसदृशं ननु दैवम् ॥ ६.४७ ॥

याति तावदधुनैव जनोऽयं व्यासरूपमजितं प्रदिदृक्षुः ।
आव्रजेदिह न वा स हि वेद स्वस्ति वोऽस्त्विति ययावथ मध्वः ॥ ६.४८ ॥

नाथ नाथ बत नोऽत्र विनाथान् मा त्यजोरुकरुणो भगवंस्त्वम् ।
नोदितं स्मृतमपीति हि शिष्यैः स्वामिनोऽभिमतभंगभयेन ॥ ६.४९ ॥

सद्गुरोर्न विरहं सहमानः सत्यतीर्थयतिरन्वगमत् तम् ।
यस्त्रिवारमितरासुतशाखास्वर्थमग्र्यमाशृणोत् पुरुसंख्यात् ॥ ६.५० ॥

दुर्गमार्गगतमप्यनुधवन् नाऽप सोऽयमरुणीभवतीने ।

लीलया सजवमाक्रममाणं व्याश्रयांतरसुदूरशिलासु ॥ ६.५१ ॥

आनिवृत्तवपुषा गुरुणाऽऽरात् पाणिना ह्यभिनयेन सुनुन्नः ।
त्रस्तधीरतिययौ स मुहूर्तात् तद्दिनोपगतमार्गमशेषम् ॥ ६.५२ ॥

आश्रमे निजजनानिह दृष्ट्वा तं प्रसादमहिमानममुष्य ।
प्रोच्य तत्प्लवनमप्यतिचित्रं तस्य तैः सह सदाऽस्मरदेषः ॥ ६.५३ ॥

वानरेंद्र इव वायुजवोऽसौ भीमसेन इव दानवभीमः ।
उल्ललास गिरिपुंगवशृंगे स व्रजन् वजिननाशननामा ॥ ६.५४ ॥

बहुसत्त्वगणं सविकं समहाविषमोक्षमहाहिमवंतमयम् ।
विषमोक्षमहाहिमवंतमयन् नगमैक्षत फुल्लदृगस्तभयः ॥ ६.५५ ॥

सुहसितकमलाकरोपगूढं सुजनसुखार्थमनंतभोगशय्यम् ।
विकसितसुमनोघटागमुच्चं मरतकरत्नमयस्थलाग्र्यशोभम् ॥ ६.५६ ॥

पादोपांतनमन्महामुनिगणं हेमप्रदीप्तांबरं श्रीमद्रत्नकलापमग्र्यकटकैर्विभ्राजितं हाटकैः
।
दृष्ट्वातं धरणीधरं सुवनमालोल्लासिनं सुंदरं स्वानंदाकृतिमस्मरन्मुररिपुं
स्वानंदतीर्थस्तदा ॥ ६.५७ ॥

॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत
नारायणपंडिताचार्यविरचिते श्रीमध्वविजये
आनंदांकिते षष्ठः सर्गः ॥